# संस्कृतनिपुणता
# Level-02

Janaseva Trust Premises, Magadi Main Road,
Channenahalli, Bengaluru- 562130
Ph- +91 8431668084 , info@vvss.res.in www.vvss.res.in

# बिभेद च पुनः सालान् सप्तैकेन महेषुणा |
# गिरि रसातलं चैव जनयन् प्रत्ययं तदा || १-१-६६

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  तदा प्रत्ययं जनयन् एकेन महेषुणा सप्त सालान् गिरि रसातलं च पुनः बिभेद ।
- अन्वयार्थः

रामः स्वलविषये सुग्रीवस्य सन्देहं ज्ञात्वा तस्मिन् विश्वासं जनयन् एकेन एव बाणेन सप्त सालान् तत्र विद्यमानं पर्वतं तथा च रसातलं विदारयामास ।

# बिभेद च पुनः सालान् सप्तैकेन महेषुणा |
# गिरि रसातलं चैव जनयन् प्रत्ययं तदा || १-१-६६

- पदपरिचयः

- भिद् – भिद् – कर्तरि – लिट् – प्रथमपुरुष - एकवचनम्।
- च – अव्ययम् ।
- पुनः – अव्ययम् ।
- सालान् – अ- पुँ- द्वितीया - बहुवचनम् ।
- सप्त - न्- पुँ- द्वितीया- बहुवचनम् ।
- एकेन – अ- पुँ- तृतीया - एकवचनम् ।
- महेषुणा – उ - पुँ- तृतीया – एकवचनम्- समस्तम् ।
- गिरिम् – इ - पुँ- द्वितीया- बहुवचनम् ।
- रसातलम् - अ- नपुँ- द्वितीया - एकवचनम् - समस्तम्।
- च – अव्ययम् ।
- एव – अव्ययम् ।
- जनयन् – त् – जनयत् – पुं – प्रथमा – एकवचनम् ।
- प्रत्ययम् – अ – पुं – द्वितीया – एकवचनम् ।
- तदा – अव्ययम् ।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

ततः प्रीतमनास्तेन विश्वस्तस्स महाकपिः |
किष्किन्धां रामसहितो जगाम च गुहां तदा || १-१-६७

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

    ततः सः महाकपिः तेन प्रीतमनाः विश्वस्तः च तदा रामसहितः किष्किन्धां गुहां जगाम ।
- अन्वयार्थः

    ततः तेन रामबलेन प्रसन्नः विश्वस्तश्च स वानरराजः सुग्रीवः रामसहितः किष्किन्धां गुहाम् अगच्छत् ।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

# ततः प्रीतमनास्तेन विश्वस्तस्स महाकपिः |
# किष्किन्धां रामसहितो जगाम च गुहां तदा || १-१-६७

- पदपरिचयः
  - ततः – अव्ययम्।
  - प्रीतमनाः – प्रीतमनस् – स् – पुं – प्रथमा - एकवचनम् ।
  - तेन – तद् – द् – सर्व - पुँ - तृतीया - एकवचनम् ।
  - विश्वस्तः – अ- पुँ- प्रथमा - एकवचनम्।
  - सः - तद् – द् – सर्व - पुँ - प्रथमा - एकवचनम् ।
  - महाकपिः – अ- पुँ- प्रथमा – एकवचनम् – समस्तम् ।
  - किष्किन्धाम् – आ – स्त्री – द्वितीया - एकवचनम्।
  - रामसहितः – अ - पुँ- प्रथमा - एकवचनम् - समस्तम्।
  - जगाम – गम् – कर्तरि – लिट् – प्रथमपुरुष – एकवचनम् ।
  - च – अव्ययम् ।
  - गुहाम् - आ – स्त्री – द्वितीया – एकवचनम् ।
  - तदा – अव्ययम् ।

ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ।
तेन नादेन महता निर्जगाम हरीश्वरः ॥ १-१-६८

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

ततः हेमपिङ्गलः हरिवरः सुग्रीवः अगर्जत् तेन महता नादेन हरीश्वरः (वाली) निर्जगाम ।

- अन्वयार्थः

ततः रामबलेन उत्साहितः सः सुवर्णवर्णः सुग्रीवः महत् – गर्जनम् अकरोत् । तेन गर्जनेन सः महाबली वाली स्वगुहायाः बहिः आजगाम ।

# ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः |
# तेन नादेन महता निर्जगाम हरीश्वरः || १-१-६८

- पदपरिचयः
  - ततः – अव्ययम् ।
  - अगर्जत् – गर्ज् – कर्तरि – लङ् - प्रथमपुरुष- एकवचनम् ।
  - हरिवरः – अ- पुँ- प्रथमा – एकवचनम् – समस्तम् ।
  - सुग्रीवः – अ- पुँ- प्रथमा - एकवचनम् ।
  - हेमपिङ्गलः - अ- पुँ- प्रथमा – एकवचनम् – समस्तम् ।
  - तेन – तद् – द् – सर्व - पुँ - तृतीया - एकवचनम् ।
  - नादेन – अ – पुं – तृतिया – एकवचनम् ।
  - महता – त् – महत् – तृतीया - एकवचनम् ।
  - जगाम – निर् + गम् – कर्तरि – लिट् – प्रथमपुरुष – एकवचनम् ।
  - हरीश्वरः – अ- पुँ- प्रथमा – एकवचनम् – समस्तम् ।

# अनुमान्य तदा तारां सुग्रीवेण समागतः |
# निजघान च तत्रैनं शरेणैकेन राघवः || १-१-६९

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  तदा वाली ताराम् अनुमान्य सुग्रीवेण (योद्धुम्) समागतः । राघवः च एनं तत्र एकेन शरेण निजघान ।
- अन्वयार्थः

  सुग्रीवस्य गर्जनं श्रुत्वा स्वभार्यां तारां प्रबोध्य अनुमतिं च सुग्रीवेण सह योद्धुं वाली बहिः आगच्छत् । रामः एकेन बाणेन एव वालिनं तत्र हतवान् ।

# अनुमान्य तदा तारां सुग्रीवेण समागतः |
# निजघान च तत्रैनं शरेणैकेन राघवः || १-१-६९

- पदपरिचयः
  - अनुमान्य – ल्यबन्तम् अव्ययम्।
  - तदा – अव्ययम्।
  - ताराम् – आ- स्त्री - प्रथमा – एकवचनम् ।
  - सुग्रीवेण – अ- पुँ- तृतीया- एकवचनम्।
  - समागतः - अ- पुँ- प्रथमा – एकवचनम् ।
  - निजघान – नि + हन् – कर्तरि – लिट् – प्रथमपुरुष - एकवचनम्।
  - च – अव्ययम्।
  - तत्र – अव्ययम्।
  - एनम् – एतद् – द् – पुं – द्वितीया - एकवचनम्।
  - शरेण – अ- पुँ- तृतीया- एकवचनम्।
  - एकेन - अ- पुँ- तृतीया- एकवचनम् ।
  - राघवः - अ- पुँ- प्रथमा – एकवचनम् ।

# ततः सुग्रीववचनाद्धत्वा वालिनमाहवे |
# सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् || १-१-७०

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  ततः राघवः सुग्रीववचनात् आहवे वालिनं हत्वा तद्राज्ये सुग्रीवम् एव प्रत्यपादयत् ।
- अन्वयार्थः

  सुग्रीवस्य आग्रहयुक्तं वचनं श्रुत्वा रामः युद्धे वालिनं हतवान् । वालि-वधानन्तरं श्रीरामः सुग्रीवमेव किष्किन्धासिहासने उपावेशयत् ।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

# ततः सुग्रीववचनाद्धत्वा वालिनमाहवे |
# सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् || १-१-७०

- पदपरिचयः
  - ततः – अव्ययम्।
  - सुग्रीववचनात् – अ- नपुँ- पञ्चमी – एकवचनम् - समस्तम्।
  - हत्वा – क्त्वान्तम् - अव्ययम् ।
  - वालिनम् – न् -वालिन्- पुँ- द्वितीया - एकवचनम्।
  - आह्वे - अ- पुँ- सप्तमी – एकवचनम् ।
  - सुग्रीवम् – अ- पुँ- द्वितीया – एकवचनम् ।
  - एव – अव्ययम्।
  - तद्राज्ये – अ – नपुं – सप्तमी – एकवचनम् ।
  - राघवः – अ- पुँ- प्रथमा – एकवचनम् ।
  - प्रत्यपादयत् – प्रति + पद् + णिच् –कर्तरि – लङ् – प्रथमपुरुष - एकवचनम्।

# स च सर्वान् समानीय वानरान् वानरर्षभः ।
# दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ।। १-१-७१

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  सः च वानरर्षभः जनकात्मजां दिदृक्षुः सर्वान् वानरान् समानीय दिशः प्रस्थापयामास ।
- अन्वयार्थः

स्वाभिषेकानन्तरं कपिश्रेष्ठः सुग्रीवः प्रत्युपकारं प्रदर्शयन् सीता कुत्र वर्तते इति ज्ञातुकामः सर्वाभ्यः दिग्भ्यः कपीन् आकार्य (एकत्रीकृत्य) सर्वाः दिशः प्रति प्रेषयामास ।

# स च सर्वान् समानीय वानरान् वानरर्षभः ।
# दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ १-१-७१

- पदपरिचयः
  - सः – द् – तद् – सर्व – प्रथमा – एकवचनम् ।
  - च – अव्ययम् ।
  - सर्वान् – अ – पुं – सर्व – द्वितीया - बहुवचनम् ।
  - समानीय – ल्यबन्तम् अव्ययम् ।
  - वानरान् - अ- पुँ- द्वितीया – बहुवचनम् ।
  - वानरर्षभः – अ- पुँ- प्रथमा – एकवचनम् ।
  - दिशः – दिश् - श् – स्त्री –द्वितीया - बहुवचनम् ।
  - प्रस्थापयामास – प्र +स्था + णिच् – कर्तरि – लिट् - प्रथमपुरुष – एकवचनम् ।
  - दिदृक्षुः – उ- पुँ- प्रथमा – एकवचनम् ।
  - जनकात्मजाम् – आ – स्त्री – पद्वितीया - एकवचनम् ।

Veda Vijnana Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

# ततो गृध्रस्य वचनात्सम्पातेर्हनुमान् बली |
# शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् || १-१-७२

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  ततः बली हनूमान् सम्पातेः गृध्रस्य वचनात् शतयोजनविस्तीर्णं लवणार्णवं पुप्लुवे ।
- अन्वयार्थः

  परमबलशाली हनूमान् सम्पातिनामकस्य गृध्रस्य तस्यां वसति वैदेही दीना कौशेयवासिनी इत्यादिवचनमनुसृत्य चतुःशतक्रोशपरिमितं क्षारसागरम् उल्लङ्घितवान् ।

# ततो गृध्रस्य वचनात्सम्पातेर्हनुमान् बली |
# शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् || १-१-७२

- पदपरिचयः
  - ततः – अव्ययम् ।
  - गृध्रस्य – अ- पुँ- षष्ठी – एकवचनम् ।
  - वचनात् – अ – नपुं – पञ्चमी - एकवचनम् ।
  - सम्पातेः – इ – पुं – षष्ठी - एकवचनम् ।
  - हनुमान् – हनुमत् – न् -पुँ- प्रथमा – एकवचनम् ।
  - बली – बलिन्- न् - पुँ- प्रथमा – एकवचनम् ।
  - शतयोजनविस्तीर्णम् – - अ- पुँ- द्वितीया – एकवचनम् – समस्तम् ।
  - पुप्लुवे – प्लु– कर्तरि – लिट् - प्रथमपुरुष – एकवचनम् ।
  - लवणार्णवम् – अ- पुँ- द्वितीया – एकवचनम् - समस्तम् ।
  - जनकात्मजाम् – आ – स्त्री – द्वितीया - एकवचनम् ।

## तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् |
## ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् || १-१-७३

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  (हनुमान् ) रावणपालितां लङ्कां पुरीं समासाद्य तत्र अशोकवनिकां गतां (रामं) ध्यायन्तीं सीतां ददर्श ।
- अन्वयार्थः

  हनुमान् रावणेन रक्षितां लङ्कानाम्नीं नगरीं गत्वा तत्र अशोकवाटिकायां रामं स्मरन्तीं सीतां दृष्टवान् ।

Veda Vijnana Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

# तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् |
# ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् || १-१-७३

- पदपरिचयः
    - तत्र – अव्ययम्।
    - लङ्काम् – आ – स्त्री – द्वितीया - एकवचनम्।
    - समासाद्य – ल्यबन्तम् अव्ययम्।
    - पुरीम् – ई – स्त्री – द्वितीया - एकवचनम्।
    - रावणपालिताम् – आ – स्त्री – द्वितीया – एकवचनम् – समस्तम् ।
    - ददर्श – दृश् – कर्तरि – लिट् – प्रथमपुरुष - एकवचनम्।
    - सीताम् – - आ – स्त्री – द्वितीया - एकवचनम् ।
    - ध्यायन्तीम् – ई – स्त्री – द्वितीया – एकवचनम् - विशेषणम्।
    - अशोकवनिकाम् – आ – स्त्री – द्वितीया – एकवचनम् – समस्तम् ।
    - गताम् – आ – स्त्री – द्वितीया - एकवचनम् ।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

# निवेदयित्वाभिज्ञानं प्रवृत्तिं च निवेद्य च |
# समाश्वास्य च वैदेहीं मर्दयामास तोरणम् || १-१-७४

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

    (ततश्च हनुमान् ) अभिज्ञानं निवेदयित्वा प्रवृत्तिं च (रामस्य) विनिवेद्य वैदेहीं समाश्वास्य च तोरणं मर्दयामास ।
- अन्वयार्थः

    तदनन्तरं हनुमान् रामस्य परिचायकम् वस्तु अङ्गुलीयकं सीतायै समर्प्य सीताहरणानन्तरं रामसुग्रीवयोः मैत्रीपर्यन्तं जातं वृत्तं ज्ञापितवान् । तदनन्तरं सीतैकवेद्यं रामस्य अङ्गइङ्गं बोधयित्वा रामः शीघ्रम् आगन्ता इति च उक्त्वा सीतां समाश्वास्य प्रतिगमनकाले हनुमान् अशोकवनिकायाः प्रवेशद्वारं अध्वंसत ।

# निवेदयित्वाभिज्ञानं प्रवृत्तिं च निवेद्य च |
# समाश्वास्य च वैदेहीं मर्दयामास तोरणम् || १-१-७४

- पदपरिचयः
  - निवेदयित्वा – क्त्वान्तम् अव्ययम्।
  - अभिज्ञानम् – अ- नपुं – द्वितीया - एकवचनम्।
  - प्रवृत्तिम् – इ – स्त्री – द्वितीया – एकवचनम् ।
  - च – अव्ययम्।
  - निवेद्य – ल्यबन्तम् अव्ययम्।
  - समाश्वास्य – ल्यबन्तम् अव्ययम्।
  - वैदेहीम् – - ई – स्त्री – द्वितीया - एकवचनम् ।
  - मर्दयामास – मर्द् + णिच् – कर्तरि – लिट् – प्रथमपुरुष - एकवचनम्।
  - तोरणम् – अ- नपुं – द्वितीया - एकवचनम्।

## पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि |
## शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् || १-१-७५

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  (सः हनुमान्) पञ्च सेनाग्रगान् सप्त मन्त्रिसुतान् च हत्वा शूरम् अक्षम् अपि निष्पिष्य ग्रहणं समुपागमत् ।
- अन्वयार्थः

  ततः परं हनुमान् पञ्च सेनापतीन् (पिङ्गलनेत्रादिनामकान्) सप्त मन्त्रिसुतान् (जाम्बुमाल्यादीन्) हत्वा वीरम् अपि रावणपुत्रम् अक्षकुमारं चूर्णीकृत्य मेघनादप्रयुक्तेन ब्रह्मास्त्रेण बद्धः जातः ।

# पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि |
# शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् || १-१-७५

- पदपरिचयः
  - पञ्च – पञ्चन् – न् – पुं – द्वितीया – बहुवचनम् ।
  - सेनाग्रगान् – अ- पुं – द्वितीया – बहुवचनम् – समस्तम् ।
  - हत्वा – क्त्वान्तम् अव्ययम् ।
  - सप्त – सप्तन् – न् – पुं – द्वितीया - बहुवचनम् ।
  - मन्त्रिसुतान् – अ – पुं – द्वितीया – बहुवचनम् – समस्तम् ।
  - अपि –अव्ययम् ।
  - शूरम् – अ- पुं – द्वितीया – एकवचनम् ।
  - अक्षम् – अ- पुं – द्वितीया – बहुवचनम् ।
  - च – अव्ययम् ।
  - निष्पिष्य – ल्यबन्तम् अव्ययम् ।
  - ग्रहणम् - अ- नपुं – द्वितीया – एकवचनम् ।
  - समुपागमत् – सम् + उप + गम् – कर्तरि – लुङ् – प्रथमपुरुष – एकवचनम् ।

# अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् ।
# मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान्यदृच्छया ॥ १-१-७६

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

(बन्धनानन्तरं हनुमान्) पैतामहात् वरात् अस्त्रेण आत्मानम् उन्मुक्तं ज्ञात्वा यन्त्रिणः तान् राक्षसान् यदृच्छया मर्षयन् (रावणं प्राप्तवान्) ।

- अन्वयार्थः

मेघनादप्रयुक्तेन ब्रह्मास्त्रेण बद्धः हनुमान् पितामहस्य वरप्रसादात् आत्मानं बन्धनमुक्तं ज्ञात्वा अपि स्वेच्छया बन्धनकर्तृणां राक्षानाम् आयासान् सहमानः रावणं प्राप्तवान् ।

# अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् |
# मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान्यदृच्छया || १-१-७६

- पदपरिचयः
  - अस्त्रेण – अ- नपुं – तृतीया – एकवचनम् ।
  - उन्मुक्तम् – अ- पुं – द्वितीया – एकवचनम् – ।
  - आत्मानम् – आत्मन् – न् – पुं – द्वितीया – एकवचनम् ।
  - ज्ञात्वा – क्त्वान्तम् अव्ययम् ।
  - पैतामहाद् – अ – पुं – पञ्चमी – एकवचनम् ।
  - वरात् –अ – पुं – पञ्चमी – एकवचनम् ।
  - मर्षयन् – त्- पुं – प्रथमा – एकवचनम् ।
  - राक्षसान् – अ- पुं – द्वितीया – बहुवचनम् ।
  - वीरः – अ- पुं – प्रथमा – एकवचनम् ।
  - यन्त्रिणः – न्- पुं – द्वितीया – बहुवचनम् ।
  - तान् – द् – तद् – सर्व – पुं – द्वितीया - बहुवचनम्।
  - यदृच्छया – आ – स्त्री – तृतीया - एकवचनम्।